॥ मानसोल्लास ॥

॥ श्रीदक्षिणामूर्तिस्तोत्रम् ॥

विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं
पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया ।
यः साक्षात्कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं
तस्मै श्री गुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ १॥

बीजस्यान्तरिवाङ्कुरो जगदिदं प्राङ्निर्विकल्पं पुनः
मायाकल्पितदेशकालकलनावैचित्र्यचित्रीकृतम् ।
मायावीव विजृम्भयत्यपि महायोगीव यःस्वेच्छया
तस्मै श्री गुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ २॥

यस्यैव स्फुरणं सदात्मकमसत्कल्पार्थगं भासते
साक्षात्तत्त्वमसीति वेदवचसा यो बोधयत्याश्रितान् ।
यत्साक्षात्करणाद्भवेन्नपुनरावृत्तिर्भवाम्भोनिधौ
तस्मै श्री गुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ३॥

नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं
ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिःस्पन्दते ।
जानामीति तमेव भान्तमनुभात्येतत्समस्तं जगत्
तस्मै श्री गुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ४॥

देहं प्राणमपीन्द्रियाण्यपि चलां बुद्धिं च शून्यं विदुः
स्त्रीबालान्धजडोपमास्त्वहमिति भ्रान्ता भृशं वादिनः ।
मायाशक्तिविलासकल्पितमहाव्यामोहसंहारिणे
तस्मै श्री गुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ५॥

राहुग्रस्तदिवाकरेन्दुसदृशो मायासमाच्छादनात्
सन्मात्रः करणोपसंहरणतो योऽभूत्सुषुप्तः पुमान् ।
प्रागस्वाप्समिति प्रबोधसमये यः प्रत्यभिज्ञायते
तस्मै श्री गुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ६॥

बाल्यादिष्वपि जाग्रदादिषु तथा सर्वास्ववस्थास्वपि
व्यावृत्तास्वनुवर्तमानमहमित्यन्तः स्फुरन्तं सदा ।
स्वात्मानं प्रकटीकरोति भजतां यो मुद्रया भद्रया
तस्मै श्री गुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ७॥

विश्वं पश्यति कार्यकारणतया स्वस्वामिसंबन्धतः
शिष्याचार्यतया तथैव पितृपुत्राद्यात्मना भेदतः ।
स्वप्ने जाग्रति वा एष पुरुषो मायापरिभ्रामितः
तस्मै श्री गुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ८॥

भूरम्भांस्यनलोऽनिलोऽम्बरमहर्नाथो हिमांशुः पुमान्
इत्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टकम् ।
नान्यत्किञ्चन विद्यते विमृशतां यस्मात्परस्माद्विभोः
तस्मै श्री गुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ९॥

सर्वात्मत्वमिति स्फुटीकृतमिदं यस्मादमुष्मिंस्तवे
तेनास्य श्रवणात्तदर्थमननाद्ध्यानाच्च संकीर्तनात् ।
सर्वात्मत्वमहाविभूतिसहितं स्यादीश्वरत्वं स्वतः
सिद्ध्येत्तत्पुनरष्टधा परिणतं चैश्वर्यमव्याहतम् ॥ १०॥

॥ मानसोल्लास ॥

विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं
पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया ।
यः साक्षात्कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं
तस्मै श्री गुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ १॥

मङ्गळं दिशतु मे विनायको
मङ्गळं दिशतु मे सरस्वती ।
मङ्गळं दिशतु मे महेश्वरो
मङ्गळं दिशतु मे सदाशिवः ॥ १॥

आत्मलाभात्परो लाभो नास्तीति मुनयो विदुः ।
तल्लाभार्थं कविः स्तौति स्वात्मानं परमेश्वरम् ॥ २॥

स्वेच्छया सृष्टमाविश्य विश्वं यो मनसि स्थितः ।
स्तोत्रेण स्तूयतेऽनेन स एव परमेश्वरः ॥ ३॥

अस्ति प्रकाशत इति व्यवहारः प्रवर्तते ।
तच्चास्तित्वं प्रकाशत्वं कस्मिन्नर्थे प्रतिष्ठितम् ॥ ४॥

किं तेषु तेषु वाऽर्थेषु किं वा सर्वात्मनीश्वरे ।

ईश्वरत्वं च जीवत्वं सर्वात्मत्वं च कीदृशम् ॥ ५॥

जानीयात्कथं जीवः किं तज्ज्ञानस्य साधनम् ।
ज्ञानात्तस्य फलं किं स्यादेकत्वं च कथं भवेत् ॥ ६॥

सर्वज्ञः सर्वकर्ता च कथमात्मा भविष्यति ।
शिष्यं प्रतीत्थं पृच्छन्तं वक्तुमारभते गुरुः ॥ ७॥

अन्तरस्मिन्निमे लोका अन्तर्विश्वमिदं जगत् ।
बहिर्वन्माययाऽऽभाति दर्पणे स्वशरीरवत् ॥ ८॥

स्वप्ने स्वान्तर्गतं विश्वं यथा पृथगिवेक्ष्यते ।
तथैव जाग्रत्कालेऽपि प्रपञ्चोऽयं विविच्यताम् ॥ ९॥

स्वप्ने स्वसत्तैवार्थानां सत्ता नान्येति निश्चिता ।
को जाग्रति विशेषोऽस्ति जडानामाशु नाशिनाम् ॥ १०॥

स्वप्ने प्रकाशो भावानां स्वप्रकाशान्न हीतरः ।
जाग्रत्यपि तथैवेति निश्चिन्वन्ति विपश्चितः ॥ ११॥

निद्रया दर्शितानर्थान्न पश्यति यथोत्थितः ।
सम्यग्ज्ञानोदयादूर्ध्वं तथा विश्वं न पश्यति ॥ १२॥

अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ।
अजन्मनिद्रमस्वप्नमद्वैतं बुध्यते तदा ॥ १३॥

श्रुत्याऽऽचार्यप्रसादेन योगाभ्यासवशेन च ।
ईश्वरानुग्रहेणापि स्वात्मबोधो यदा भवेत् ॥ १४॥

भुक्तं यथाऽन्नं कुक्षिस्थं स्वात्मत्वेनैव पश्यति ।
पूर्णाहन्ताकबळितं विश्वं योगीश्वरस्तथा ॥ १५॥

यथा स्वप्ने नृपो भूत्वा भुक्त्वा भोगान्यथेप्सितान् ।
चतुरङ्गबलोपेतः शत्रुं जित्वा रणाङ्गणे ॥ १६॥

परात्पराजितो भूत्वा वनं प्राप्य तपश्चरन् ।
मुहूर्तमात्रमात्मानं मन्यते कल्पजीविनम् ॥ १७॥

तथैव जाग्रत्कालेऽपि मनोराज्यं करोत्यसौ ।
कालनद्योघयोगेन क्षीणमायुर्न पश्यति ॥ १८॥

मेघच्छन्नोंऽशुमालीव मायया मोहितोऽधिकम् ।
किञ्चित्कर्ता च किञ्चिज्ज्ञो लक्ष्यते परमेश्वरः ॥ १९॥

यद्यत्करोति जानाति तस्मिन्तस्मिन्परेश्वरः ।
राजा विद्वान् स्वसामर्थ्यादीश्वरोऽयमितीर्यते ॥ २०॥

ज्ञानक्रिये शिवेनैक्यात्सङ्क्रान्ते सर्वजन्तुषु ।
ईश्वरत्वं च जीवानां सिद्धं तच्छक्तिसङ्गमात् ॥ २१॥

अयं घटोऽयं पट इत्येवं नानाप्रतीतिषु ।
अर्कप्रभेव स्वज्ञानं स्वयमेव प्रकाशते ॥ २२॥

ज्ञानं न चेत्स्वयं सिद्धं जगदन्धं तमो भवेत् ।
न चेदस्य क्रिया काचित् व्यवहारः कथं भवेत् ॥ २३॥

क्रिया नाम परिस्पन्दपरिणामस्वरूपिणी ।
स्पन्दमाने बहिर्ज्ञाने तदङ्कुरवदुद्भवेत् ॥ २४॥

उत्पाद्यप्राप्यसंस्कार्यविकार्योपाश्रया क्रिया ।
करोति गच्छत्युन्मार्ष्टि छिनत्तीति प्रतीयते ॥ २५॥

शिवो ब्रह्मादिदेहेषु सर्वज्ञ इति भासते ।
देवतिर्यङ्मनुष्येषु किञ्चिज्ज्ञस्तारतम्यतः ॥ २६॥

जरायुजोऽण्डजश्चैव स्वेदजः पुनरुद्भिदः ।
एते चतुर्विधाः देहाः क्रमशो न्यूनवृत्तयः ॥ २७॥

ब्रह्मादिस्तम्बपर्यन्ता स्वप्नकल्पैव कल्पना ।
साक्षात्कृतेऽनवच्छिन्नप्रकाशे परमात्मनि ॥ २८॥

अणोरणीयान्महतो महीयानिति वेदवाक् ।
रुद्रोपनिषदप्येतं स्तौति सर्वात्मकं शिवम् ॥ २९॥

ईश्वरो गुरुरात्मेति मूर्तिभेदविभागिने ।
व्योमवद्व्याप्तदेहाय दक्षिणामूर्तये नमः ॥ ३०॥

इति श्रीदक्षिणामूर्तिस्तोत्रार्थप्रतिपादके ।
प्रबन्धे मानसोल्लासे प्रथमोल्लाससंग्रहः ॥ ३१॥

बीजस्यान्तरिवाङ्कुरो जगदिदं प्राङ्निर्विकल्पं पुनः
मायाकल्पितदेशकालकलनावैचित्र्यचित्रीकृतम् ।
मायावीव विजृम्भयत्यपि महायोगीव यःस्वेच्छया
तस्मै श्री गुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ २॥

उपादानं प्रपञ्चस्य संयुक्ताः परमाणवः ।
मृदन्वितो घटस्तस्माद्भासते नेश्वरान्वितः ॥ १॥

परमाणुगता एव गुणा रूपरसादयः ।
कार्ये समानजातीयमारभन्ते गुणान्तरम् ॥ २॥

कार्यं यत्र समन्वेति कारणं समवायि तत् ।
चक्राद्यं साधनं यत्तु घटस्यासमवायि तत् ॥ ३॥

समवायिनि तिष्ठेद्यत् समवाय्याश्रये तथा ।
कार्येऽवधृतसामर्थ्यं कल्प्यतेऽसमवायि तत् ॥ ४॥

निमित्तं कारणं तेषामीश्वरश्च कुलालवत् ।
यत्कार्यं जायते यस्मात्तस्मिन् तत्प्रतितिष्ठति ॥ ५॥

मृत्तिकायां घटस्तन्तौ पटः स्वर्णेऽङ्गुलीयकम् ।
इति वैशेषिकाः प्राहुस्तथा नैयायिका अपि ॥ ६॥

रजः सत्त्वं तमश्चेति प्रधानस्य गुणास्त्रयः ।
रजो रक्तं चलं तेषु सत्त्वं शुक्लं प्रकाशकम् ॥ ७॥

तमः कृष्णं चावरकं सृष्टिस्थित्यन्तहेतवः ।
इति सांख्याश्च भाषन्ते तेषां दूषण उच्यते ॥ ८॥

अङ्कुरादिफलान्तेषु कार्येष्वस्तित्वमिष्यते ।
कुत आगत्य सम्बद्धा वटबीजेषु ते कणाः ॥ ९॥

कारणानुगतं कार्यमिति सर्वैश्च सम्मतम् ।
तस्मात्सत्ता स्फुरत्ता च सर्वत्राप्यनुवर्तते ॥ १०॥

पुष्पे फलत्वमापन्ने क्षीरे च दधितां गते ।
विजातीयाः प्रतीयन्ते गुणा रूपरसादयः ॥ ११॥

कारणं कार्यमंशोंऽशी जातिव्यक्ती गुणी गुणः ।
क्रिया क्रियावानित्याद्याः प्रकाशस्यैव कल्पनाः ॥ १२॥

चैतन्यं परमाणूनां प्रधानस्यापि नेष्यते ।
ज्ञानक्रिये जगत्क्लृप्तौ दृश्येते चेतनाश्रये ॥ १३॥

कालरूपक्रियाशक्त्या क्षीरात्परिणमेद्दधि ।
ज्ञातृज्ञानज्ञेयरूपं ज्ञानशक्त्या भवेज्जगत् ॥ १४॥

ज्ञानं द्विधा वस्तुमात्रद्योतकं निर्विकल्पकम् ।
सविकल्पन्तु संज्ञादिद्योतकत्वादनेकधा ॥ १५॥

सङ्कल्पसंशयभ्रान्तिस्मृतिसादृश्यनिश्चयाः ।
ऊहोऽनध्यवसायश्च तथाऽन्येनुभवा अपि॥ १६॥

प्रत्यक्षमेकं चार्वाकाः कणादसुगतौ पुनः ।
अनुमानञ् च तच्चापि सांख्याः शब्दं च ते अपि ॥ १७॥

न्यायैकदर्शिनोप्यवेमुपमानं च के चन ।
अर्थापत्त्या सहैतानि चत्वार्याह प्रभाकरः ॥ १८॥

अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथा ।
सम्भवैतिह्ययुक्तानि तानि पौराणिका जगुः ॥ १९॥

द्रव्यं गुणस्तथा कर्म सामन्यं च विशेषकम् ।
समवायं च काणादाः पदार्थान्षट्प्रचक्षते ॥ २०॥

नव द्रव्याणि भूतानि दिक्कालात्ममनांसि च ।
चतुर्विंशतिरेव स्युर्गुणाः शब्दादिपञ्चकम् ॥ २१॥

परिमाणं च सङ्ख्या च द्वौ संयोगविभागकौ ।
स्वभावतः पृथक्त्वं च गुरुत्वं द्रवता पुनः ॥ २२॥

परत्वं चापरत्वं च स्नेहः संस्कार इत्यपि ।

धीर्द्वेषसुखदुःखेच्छाधर्माधर्मप्रयत्नकाः ॥ २३॥

संस्कारस्त्रिविधो वेग इष्वादेर्गतिकारणम् ।
दृष्टश्रुतानुभूतार्थस्मृतिहेतुश्च भावना ॥ २४॥

स्थितस्थापकता नाम पूर्ववत्स्थितिकारणम् ।
आकृष्टशाखाभूर्जादौ स्पष्टमेवोपलक्ष्यते ॥ २५॥

उत्क्षेपणमवक्षेपो गमनं च प्रसारणम् ।
आकुञ्चनमिति प्राहुः कर्म पञ्चविधं बुधाः ॥ २६॥

सामान्यं द्विविधं प्रोक्तं परं चापरमेव च ।
परं सत्तैव सर्वत्र तदनुस्यूतवर्तनम् ॥ २७॥

द्रव्यत्वं च गुणत्वाद्यं सामान्यमपरं तथा ।
विशेषाः स्युरनन्तास्ते व्यावृत्तिज्ञानहेतवः ॥ २८॥

रूपस्येव घटे नित्यः सम्बन्धः समवायकः ।
कालाकाशदिगात्मानो नित्याश्च विभवश्च ते ॥ २९॥

चतुर्विधाः परिच्छिन्ना नित्याश्च परमाणवः ।
इति वैशेषिकमते पदार्थाः षट् प्रकीर्तिताः ॥ ३०॥

माया प्रधानमव्यक्तमविद्याऽज्ञानमक्षरम् ।
अव्याकृतं च प्रकृतिः तम इत्यभिधीयते ॥ ३१॥

मायायां ब्रह्मचैतन्यप्रतिबिम्बानुषङ्गतः ।
महत्कालपुमांसः स्युः महत्तत्त्वादहंकृतिः ॥ ३२॥

तामसात्स्युरहङ्कारात्खानिलाग्न्यम्बुभूमयः ।
शब्दः स्पर्शश्च रूपं च रसो गन्धोप्यनुक्रमात् ॥ ३३॥

इन्द्रियाणां च विषया भूतानामपि ते गुणाः ।
देवाः सदाशिवश्चेशो रुद्रो विष्णुश्चतुर्मुखः ॥ ३४॥

सात्त्विकात्स्यादहङ्कारादन्तःकरणधीन्द्रियम् ।
मनो बुद्धिरहङ्कारश्चित्तं करणमान्तरम् ॥ ३५॥

संशयो निश्चयो गर्वः स्मरणं विषया अमी ।
चन्द्रः प्रजापती रुद्रः क्षेत्रज्ञ इति देवताः ॥ ३६॥

श्रोत्रं त्वक्चक्षु जिह्वा घ्राणं ज्ञानेन्द्रियं विदुः ।
दिग्वातसूर्यवरुणा नासत्यौ देवताः स्मृताः ॥ ३७॥

राजसात्स्युरहङ्कारात्कर्मेन्द्रियसमीरणाः ।
कर्मेन्द्रियाणि वाक्पाणिः पादः पायुरुपस्थकम् ॥ ३८॥

वचनादानगमनविसर्गानन्दसंज्ञकाः ।
विषया देवतास्तेषां वह्नीन्द्रोपेन्द्रमृत्युकाः ॥ ३९॥

प्राणोपानः समानश्चोदानव्यानौ च वायवः ।
भूतैस्तु पञ्चभिः प्राणैः चतुर्दशभिरिन्द्रियैः ॥ ४०॥

चतुर्विंशतितत्त्वानि साङ्ख्यशास्त्रविदो विदुः ।
महान्कालः प्रधानं च मायाविद्ये च पूरुषः ॥ ४१॥

इति पौराणिकाः प्राहुस्त्रिंशतत्त्वानि तैः सह ।
बिन्दुनादौ शक्तिशिवौ शान्तातीतौ ततः परम् ॥ ४२॥

षट्त्रिंशतत्वमित्युक्तं शैवागमविशारदैः ।
सर्वे विकल्पाः प्रागासन् बीजेऽङ्कुर इवात्मनि ॥ ४३॥

इच्छाज्ञानक्रियारूपमायया ते विजृम्भिताः ।
इच्छाज्ञानक्रियापूर्वा यस्मात्सर्वाः प्रवृत्तयः ॥ ४४॥

सर्वेऽपि जन्तवस्तस्मादीश्वरा इति निश्चिताः ।
बीजाद्वृक्षस्तरोबीजं पारम्पर्येण जायते ॥ ४५॥

इतिशङ्कानिवृत्त्यर्थं योगिदृष्टान्तकीर्तनम् ।
विश्वामित्रादयः पूर्वे परिपक्वसमाधयः ॥ ४६॥

उपादानोपकरणप्रयोजनविवार्जिताः ।
स्वेच्छया ससृजुः सर्गं सर्वभोगोपबृंहितम् ॥ ४७॥

ईश्वरोऽनन्तशक्तित्वात्स्वतन्त्रोऽन्यानपेक्षकः ।
स्वेच्छामात्रेण सकलं सृजत्यवति हन्ति च ॥ ४८॥

न कारकाणां व्यापारात्कर्ता स्यान्नित्य ईश्वरः ।
नापि प्रमाणव्यापरात् ज्ञाताऽसौ स्वप्रकाशकः ॥ ४९॥

ज्ञातृत्वमपि कर्तृत्वं स्वातन्त्र्यात्तस्य केवलम् ।
या चेच्छाशक्तिवैचित्री साऽस्य स्वच्छन्दकारिता ॥ ५०॥

यया कर्तुं न वा कर्तुमन्यथा कर्तुमर्हति ।
स्वतन्त्रामीश्वरेच्छां के परिच्छेतुमिहेशते ॥ ५१॥

श्रुतिश्च सोऽकामयतेतीच्छया सृष्टिमीशितुः ।
तस्मादात्मन आकाशः सम्भूत इति चाब्रवीत् ॥ ५२॥

निमित्तमात्रं चेदस्य जगतः परमेश्वरः ।
विकारित्वं विनाशित्वं भवेदस्य कुलालवत् ॥ ५३॥

बुद्ध्यादयो नव गुणाः नित्या एवेश्वरस्य चेत् ।
नित्येच्छावान् जगत्सृष्टौ प्रवतेतैव सर्वदा ॥ ५४॥

प्रवृत्त्युपरमाभावात्संसारो नैव नश्यति ।
मोक्षोपदेशो व्यर्थः स्यादागमोऽपि निरर्थकः ॥ ५५॥

तस्मान्मायाविलासोऽयं जगत्कर्तृत्वमीशितुः ।
बन्धमोक्षोपदेशादिव्यवहारोऽपि मायया ॥ ५६॥

इति श्रीदक्षिणामूर्तिस्तोत्रार्थप्रतिपादके ।
प्रबन्धे मानसोल्लासे द्वितीयोल्लाससंग्रहः ॥ ५७॥

यस्यैव स्फुरणं सदात्मकमसत्कल्पार्थगं भासते
साक्षात्तत्त्वमसीति वेदवचसा यो बोधयत्याश्रितान् ।
यत्साक्षात्करणाद्भवेन्नपुनरावृत्तिर्भवाम्भोनिधौ
तस्मै श्री गुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ३॥

सत्तास्फुरत्ते भावेषु कुत आगत्य सङ्गते ।
बिम्बादिदर्पणन्यायादित्थं पृच्छन् प्रबोध्यते ॥ १॥

असत्कल्पेषु भावेषु जडेषु क्षणनाशिषु ।
अस्तित्वं च प्रकाशत्वं नित्यात्संक्रामतीश्वरात् ॥ २॥

आत्मसत्तैव सत्तैषां भावानां न ततोऽधिका ।
तथैव स्फुरणं चैषां नात्मस्फुरणतोऽधिकम् ॥ ३॥

ज्ञानानि बहुरूपाणि तेषं च विषया अपि ।
अहङ्कारेऽनुषज्यन्ते सूत्रे मणिगणा इव ॥ ४॥

प्रकाशाभिन्नमेवैतद्विश्वं सर्वस्य भासते ।
लहरीबुद्बुदादीनां सलिलान्न पृथक्स्थितिः ॥ ५॥

जानामित्येव यज्ज्ञानं भावानाविश्य वर्तते ।
ज्ञातं मयेति तत्पश्चाद्विश्राम्यत्यन्तरात्मनि ॥ ६॥

घटादिकानि कार्याणि विश्राम्यन्ति मृदादिषु ।
विश्वं प्रकाशाभिन्नत्वाद्विश्राम्येत्परमेश्वरे ॥ ७॥

स्वगतेनैव काळिम्ना दर्पणं मलिनं यथा ॥

अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ ८॥

घटाकाशो महाकाशो घटोपाधिकृतो यथा ।
देहोपाधिकृतो भेदो जीवात्परमात्मनोः ॥ ९॥

तत्त्वमस्यादिवाक्यैस्तु तयोरैक्यं प्रदर्श्यते ।
सोयं पुरुष इत्युक्ते पुमानेको हि दृश्यते ॥ १०॥

यज्जगत्कारणं तत्त्वं तत्पदार्थः स उच्यते ।
देहादिभिः परिच्छिन्नो जीवस्तु त्वंपदाभिधः ॥ ११॥

तद्देशकालावस्थादौ दृष्टः स इति कथ्यते ।
तथैतद्देशकालादौ दृष्टोऽयमिति कीर्त्यते ॥ १२॥

मुख्यं तदेतद्वैशिष्ट्यं विसृज्य पदयोर्द्वयोः ।
पुम्मात्रं लक्षयत्येकं यथा सोयं पुमान्वचः ॥ १३॥

प्रत्यक्त्वं च पराक्त्वं च त्यक्त्वा तत्त्वमसीति वाक् ।
तथैव लक्षयत्यैकं जीवात्मपरमात्मनोः ॥ १४॥

सामानाधिकरणाख्यः सम्बन्धः पदयोरिह ।
विशेषणविशेष्यत्वं सम्बन्धः स्यात्पदार्थयोः ॥ १५॥

लक्ष्यलक्षणसंयोगाद्वाक्यमैक्यं च बोधयेत् ।
गङ्गायां घोष इतिवन्न जहल्लक्षणा भवेत् ॥ १६॥

नाजहल्लक्षणाऽपि स्याच्छ्वेतोधावतिवाक्यवत् ।
तत्त्वमस्यादिवाक्यानां लक्षणा भागलक्षणा ॥ १७॥

सोऽयं पुरुष इत्यादिवाक्यानामिव कीर्तिता ।
भिन्नवृत्तिनिमित्तानां शब्दानामेकवस्तुनि ॥ १८॥

प्रवृत्तिस्तु समानाधिकरणत्वमिहोच्यते ।
परस्यांशो विकारो वा जीवो वाक्येन नोच्यते ॥ १९॥

जीवात्मना प्रविष्ठत्वात्स्वमायासृष्टमूर्तिषु ।
निरंशो निर्विकारोऽसौ श्रुत्या युक्त्या च गम्यते ॥ २०॥

घटाकाशो विकरो वा नांशो वा वियतो यथा ।
त्वमिन्द्रोसीतिवद्वाक्यं न खलु स्तुतितत्परम् ॥ २१॥

न सादृश्यपरं वाक्यमग्निर्माणवकादिवत् ।
न कार्यकारणत्वस्य साधनं मृद्घटादिवत् ॥ २२॥

न जाति व्यक्तिगमकं गौः खण्ड इतिवद्वचः ।
गुणगुण्यात्मकं वाक्यं नैतन्नीलोत्पलादिवत् ॥ २३॥

नोपासनापरं वाक्यं प्रतिमास्वीशबुद्धिवत् ।
न वौपचारिकं वाक्यं राजवद्राजपूरुषे ॥ २४॥

जीवात्मना प्रविष्टोऽसावीश्वरः श्रूयते यतः ।
देहेन्द्रियमनोबुद्धिप्राणाहङ्कारसंहतौ ॥ २५॥

आत्मसङ्कलनादज्ञैरात्मत्वं प्रतिपाद्यते ।
वह्निधीः काष्ठलोहादौ वह्निसङ्कलनादिव ॥ २६॥

देहमन्नमयं कोशमाविश्यात्मा प्रकाशते ।
स्थूलो बालः कृशः कृष्णो वर्णाश्रमविकल्पवान् ॥ २७॥

प्राणकोशेऽपि जीवामि क्षुधितोऽस्मि पिपासितः ।
संशितो निश्चितो मन्ये इति कोशे मनोमये ॥ २८॥

विज्ञानमयकोशस्थो विजानामीति तिष्ठति ।
आनन्दमयकोशाख्ये त्वहङ्कारे पुराकृतैः ॥ २९॥

पुण्यैरुपासनाभिश्च सुखितोऽस्मीति मोदते ।
एवं कंचुकितः कोशैः कंचुकैरिव पञ्चभिः ॥ ३०॥

परिच्छिन्न इवाभाति व्याप्तोऽपि परमेश्वरः ।
यथा सलिलमाविश्य बहुधा भाति भस्करः ॥ ३१॥

तथा शरीराण्याविश्य बहुधा स्फुरतीश्वरः ।
कारणत्वं च कार्यत्वं तटस्थं लक्षणं तयोः ॥ ३२॥

शाखायां चन्द्र इतिवन्नैव मुख्यमिदं मतम् ।
महाप्रकाश इत्युक्तं स्वरूपं चन्द्रलक्षणम् ॥ ३३॥

सच्चिदानन्दरूपत्वं स्वरूपं लक्षणं तयोः ।
एकलक्षणयोरैक्यं वाक्येन प्रतिपाद्यते ॥ ३४॥

तस्मादेकप्रकाशत्वं सर्वात्मत्वमिति स्थितम् ।
देवतिर्यङ्मनुष्याणां प्रकाशान्न पृथक्स्थितिः ॥ ३५॥

जीवः प्रकाशाभिन्नत्वात्सर्वात्मेत्यभिधीयते ।
एवं प्रकाशरूपत्वपरिज्ञाने दृढीकृते ॥ ३६॥

पुनरावृत्तिरहितं कैवल्यं पदमश्नुते ।
सकृत्प्रसक्तमात्रोऽपि सर्वात्मत्व यदृच्छया ॥ ३७॥

सर्वपापविनिर्मुक्तः शिवलोके महीयते ।
सर्वात्मभावना यस्य परिपक्वा महात्मनः ।
संसारतारकः साक्षात्स एव परमेश्वरः ॥ ३८॥

इति श्रीदक्षिणामूर्तिस्तोत्रार्थप्रतिपादके ।
प्रबन्धे मानसोल्लासे तृतीयोल्लाससंग्रहः ॥ ३९॥

नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं
ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिःस्पन्दते ।
जानामीति तमेव भान्तमनुभात्येतत्समस्तं जगत्
तस्मै श्री गुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ४॥

स्वतः सन्तः प्रकाशन्ते भावा घटपटादयः ।
नेश्वरस्य समावेशादित्यस्योत्तरमुच्यते ॥ १॥

अहमित्यनुसन्धाता जानामीति न चेत्स्फुरेत् ।
कस्य को वा प्रकाशेत जगच्च स्यात्सुषुप्तवत् ॥ २॥

प्रागूर्ध्वं चासतां सत्त्वं वर्तमानेऽपि न स्वतः ।
तस्मादीशे स्थितं सत्त्वं प्रागूर्ध्वत्वविवर्जिते ॥ ३॥

स्वयमेव प्रकाशेरन् जडा यदि विनेश्वरम् ।
सर्वं सर्वस्य भासेत न वा भासेत किञ्चन ॥ ४॥

तस्मात्सर्वज्ञमज्ञं वा जगत्स्यादेकरूपकम् ।
तुल्ये स्वयंप्रकाशत्वे जडचेतनयोर्मिथः ॥ ५॥

तुल्यमेव प्रसज्येरन् ग्राह्यग्राहकतादयः ।
इन्द्रियाणामनियमाच्चाक्षुषा स्यू रसादयः ॥ ६॥

मलिनामलिनादर्शपश्चात्प्राग्भागतुल्ययोः ।
क्रियाशक्तिज्ञानशक्त्येरन्तःकरणभागयोः ॥ ७॥

प्रतिबिम्बे स्फुरन्नीशः कर्ता ज्ञातेति कथ्यते ।
बुद्धिः सत्त्वगुणोत्कर्षान्निर्मलो दर्पणो यथा ॥ ८॥

गृह्णाति विषयच्छायामात्मच्छायानुभावतः ।
अन्तःकरणसम्बन्धान्निखिलानीन्द्रियाण्यपि ॥ ९॥

रथाङ्गनेमिवलये कीलिता इव कीलकाः ।
नाड्योऽन्तःकरणे स्यूता जलसंस्यूतसूत्रवत् ॥ १०॥

ताभिस्तु गोळकान्ताभिः प्रसर्पन्ति स्फुलिङ्गवत् ।
करणानि समस्तानि यथास्वं विषयं प्रति ॥ ११॥

देहस्य मध्यमं स्थानं मूलाधार इतीर्यते ।
गुदात्तु द्व्यङ्गुलादूर्ध्वं मेढ्रात्तु द्व्यङ्गुलादधः ॥ १२॥

त्रिकोणोऽधोमुखाग्रश्च कन्यकायोनिसन्निभः ।
यत्र कुण्डलिनी नाम पराशक्तिः प्रतिष्ठिता ॥ १३॥

प्राणाग्निबिन्दुनादानां सवित्री सा सरस्वती ।
मूलाधाराग्रकोणस्था सुषुम्ना ब्रह्मरन्ध्रगा ॥ १४॥

मूलेऽर्धच्छिन्नवंशाभा षडाधारसमन्विता ।
तत्पार्श्वकोणयोर्जाते द्वे इडापिङ्गले स्थिते ॥ १५॥

नाडीचक्रमिति प्राहुः तस्मान्नाड्यः समुद्गताः ।
गान्धारी हस्तिजिह्वा च नयनान्तं प्रधावतः ॥ १६॥

नाडीचक्रेण संस्यूते नासिकान्तमुभे गते ।
नाभिमण्डलमाश्रित्य कुक्कुटाण्डमिव स्थितम् ॥ १७॥

नाडीचक्रमिति प्राहुस्तस्मान्नाड्यः समुद्गताः ।
पूषा चालम्बुषा नाडी कर्णद्वयमुपाश्रिते ।
नाडी शुक्लाह्वया तस्माद् भ्रूमध्यमुपसर्पति ॥ १८॥

सरस्वत्याह्वया नाडी जिह्वान्ता वाक्प्रसारिणी ।
नाडी विश्वोदरी नाम भुङ्क्तेऽन्नं सा चतुर्विधम् ॥ १९॥

पीत्वा पयस्विनी तोयं कण्ठस्था कुरुते क्षुतम् ।
नाडीचक्रात्समुद्भूता नाड्यस्तिस्रस्त्वधोमुखाः ॥ २०॥

राका शुक्लं सिनीवाली मूत्रं मुञ्चेत्कुहुर्मलम् ।
भुक्तान्नरसमादाय शङ्खिनी धमनी पुनः ॥ २१॥

कपालकुहरं गत्वा मूर्ध्नि सञ्चिनुते सुधाम् ।
शतं चैका च नाड्यः स्युस्तासामेका शिरोगता ॥ २२॥

तयोर्ध्वमायन्मुक्तः स्यादिति वेदान्तशासनम् ।
यदा बुद्धिगतैः पुण्यैः प्रेरितेन्द्रियमार्गतः ॥ २३॥

शब्दादीन् विषयान् भुङ्क्ते तदा जागरितं भवेत् ।

संहृतेष्विन्द्रियेष्वेषु जाग्रत्संस्कारजान्पुमान् ॥ २४॥

मानसान्विषयान्भुङ्क्ते स्वप्नावस्था तदा भवेत् ।
मनसोप्युपसंहारः सुषुप्तिरिति कथ्यते ॥ २५॥

तत्र मायासमाच्छन्नः सन्मात्रो वर्तते पुमान् ।
मूढो जडोऽज्ञ इत्येवं मायावेशात्प्रकाशते ॥ २६॥

सुखमस्वाप्समित्येवं प्रबोधसमये पुमान् ।
सच्चिदानन्दरूपः सन् सम्यगेव प्रकाशते ॥ २७॥

इत्थं जगत्समाविश्य भासमाने महेश्वरे ।
सूर्यादयोऽपि भासन्ते किमुतान्ये घटादयः ॥ २८॥

तस्मात्सत्ता स्फुरत्ता च भावानामीश्वराश्रयात् ।
सत्यं ज्ञानमनन्तं च श्रुत्या ब्रह्मोपदिश्यते ॥ २९॥

जाग्रत्स्वप्नोद्भवं सर्वमसत्यं जडमन्धवत् ।
ईश्वरश्चाहमित्येवं भासते सर्वजन्तुषु ॥ ३०॥

निर्विकल्पश्च शुद्धश्च मलिनश्चेत्यहं त्रिधा ।
निर्विकल्पं परं ब्रह्म निर्धूताखिलकल्पनम् ॥ ३१॥

धूल्यन्धकारधूमाभ्रनिर्मुक्तगगनोपमम् ।
विवेकसमये शुद्धं देहादीनां व्यपोहनात् ॥ ३२॥

यथाऽन्तरिक्षं संक्षिप्तं नक्षत्रैः किञ्चिदीक्ष्यते ।
देहेन्द्रियादिसंसर्गान्मलिनं कलुषीकृतम् ॥ ३३॥

यथाऽऽकाशं तमोरूढं स्फुरत्यनवकाशवत् ।
अहमित्यैश्वरं भावं यदा जीवः प्रबुध्यते ॥ ३४॥

सर्वज्ञः सर्वकर्ता च तदा जीवो भविष्यति ।
माययाधिकसम्मूढो विद्ययेशः प्रकाशते ॥ ३५॥

निर्विकल्पानुसन्धाने सम्यगात्मा प्रकाशते ।
अविद्याख्यतिरोधानव्यपाये परमेश्वरः ।
दक्षिणामूर्तिरूपोसौ स्वयमेव प्रकाशते ॥ ३६॥

इति श्रीदक्षिणामूर्तिस्तोत्रार्थप्रतिपादके ।
प्रबन्धे मानसोल्लासे चतुर्थोल्लाससंग्रहः ॥ ३७॥

देहं प्राणमपीन्द्रियाण्यपि चलां बुद्धिं च शून्यं विदुः
स्त्रीबालान्धजडोपमास्त्वहमिति भ्रान्ता भृशं वादिनः ।
मायाशक्तिविलासकल्पितमहाव्यामोहसंहारिणे
तस्मै श्री गुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ५॥

प्रमाणमेकं प्रत्यक्षं तत्त्वं भूतचतुष्टयम् ।
मोक्षश्च मरणान्नान्यः कामार्थौ पुरुषार्थकौ ॥ १॥

न हि खल्वीश्वरः कर्ता परलोककथा वृथा ।
देहं विनाऽस्ति चेदात्मा कुम्भवद्दृश्यतां पुरः ॥ २॥

ह्रस्वो दीर्घो युवा बाल इति देहो हि दृश्यते ।
अस्ति जातः परिणतो वृद्धः क्षीणो जरन्मृतः ॥ ३॥

इत्येवमुक्ताः षड्भावविकारा देहसंश्रयाः ।
वर्णाश्रमविभागश्च देहेष्वेव प्रतिष्ठितः ॥ ४॥

जातकर्मादिसंस्कारो देहस्यैव विधीयते ।
शतं जीवेति देहस्य प्रयुञ्जन्त्याशिषं शुभाम् ॥ ५॥

इति प्रपञ्चं चार्वाको वंचयत्यल्पचेतनः ।
केचिच्छ्वसिमि जीवामि क्षुधितोस्मि पिपासितः ॥ ६॥

इत्यादिप्रत्ययबलात्प्राणमात्मेति मन्वते ।
केचिच्छृणोमि पश्यामि जिघ्राम्या स्वादयाम्यहम् ॥ ७॥

इतीन्द्रियाणामात्मत्वं प्रतियन्ति ततोधिकम् ।
जानामिप्रत्ययबलाद्बुद्धिरित्यपरे जगुः ॥ ८॥

मायाव्यामूढचित्तानां तेषां दूषणमुच्यते ।
देहादीनां जडार्थानां पाषाणवदनात्मनाम् ॥ ९॥

कथं भवेदहम्भावः समावेशं विनेशितुः ।
देहस्तावदयं नात्मा दृश्यत्वाच्च जडत्वतः ॥ १०॥

रूपादिमत्त्वात्सांशत्वाद्भौतिकत्वाच्च कुम्भवत् ॥

मूर्च्छासुषुप्तिमरणेश्वपि देहः प्रतीयते ॥ ११॥

देहादिव्यतिरिक्तत्वात्तदाऽऽत्मा न प्रकाशते ।
यथा जगत्प्रवृत्तीनामादिकारणमंशुमान् ॥ १२॥

पुमांस्तथैव देहादिप्रवृत्तौ कारणं परम् ।
मम देहोयमित्येवं स्त्रीबालान्धाश्च मन्वते ॥ १३॥

देहोहमिति नावैति कदाचिदपि कश्चन ।
इन्द्रियाण्यपि नात्मानः करणत्वात्प्रदीपवत् ॥ १४॥

वीणादिवाद्यवच्छ्रोत्रं शब्दग्रहणसाधनम् ।
चक्षुस्तेजस्त्रितयवद्रूपग्रहणसाधनम् ॥ १५॥

गन्धस्य ग्राहकं घ्राणं पुष्पसम्पुटकादिवत् ।
रसस्य ग्राहिका जिह्वा दधिक्षौद्रघृतादिवत् ॥ १६॥

इन्द्रियाणि न मे सन्ति मूकोन्धो बधिरोस्म्यहम् ।
इत्याहुरिन्द्रियैर्हीना जनाः किं ते निरात्मकाः ॥ १७॥

प्राणोप्यात्मा न भवति ज्ञानाभावात्सुषुप्तिषु ।
जाग्रत्स्वप्नोपभोगोत्थश्रमविच्छित्तिहेतवे ॥ १८॥

सुषुप्तिं पुरुषे प्राप्ते शरीरमभिरक्षितुम् ।
शेषकर्मोभोगार्थं प्राणश्चरति केवलम् ॥ १९॥

प्राणस्य तत्राचैतन्यं करणोपरमे यदि ।
प्राणे व्याप्रियमाणे तु करणोपरमः कथम् ॥ २०॥

सम्राजि हि रणोद्युक्ते विरमन्ति न सैनिकाः ।
तस्मान्न करणस्वामी प्राणो भवितुमर्हति ॥ २१॥

मनसः प्रेरके पुंसि विरते विरमन्त्यतः ।
करणानि समस्तानि तेषां स्वामी ततः पुमान् ॥ २२॥

बुद्धिस्तु क्षणिका वेद्या गमागमसमन्विता ।
आत्मनः प्रतिबिम्बेन भासिता भासयेज्जगत् ॥ २३॥

आत्मन्युत्पद्यते बुद्धिरात्मन्येव प्रलीयते ।
प्रागूर्ध्वं चासती बुद्धिः स्वयमेव न सिध्यति ॥ २४॥

ज्ञानाच्चेत्पूर्वपूर्वस्मादुत्तरोत्तरसम्भवः ।
युगपद्बहुबुद्धित्वं प्रसज्येत क्षणे क्षणे ॥ २५॥

बुद्ध्यन्तरं न जनयेन्नाशोत्त्रमसत्त्वतः ।
एषां सङ्घात आत्मा चेदेकदेशे पृथक्कृते ॥ २६॥

न चैतन्यं प्रसज्येत सङ्घाताभावतस्तदा ।
भिन्नदृग्गत्यभिप्राये बहुचेतनपुञ्जितम् ॥ २७॥

सद्यो भिन्नं भवेदेतन्निष्क्रियं वा भविष्यति ।
देहस्यान्तर्गतोप्यात्मा व्याप्त एवेति बुध्यते ॥ २८॥

अणुप्रमाणश्चेदेष व्याप्नुयान्नाखिलं वपुः ।
देहप्रमाणश्चेन्न स्याद्बालस्य स्थविरादिता ॥ २९॥

देहवत्परिणामी चेत्तद्वदेव विनङ्क्ष्यति ।
कर्मणां परिणामेन क्रिमिहस्त्यादिमूर्तिषु ॥ ३०॥

व्याप्तत्वात्प्रविशत्यात्मा घटादिष्वन्तरिक्षवत् ।
परमाणुप्रमाणेऽपि मनसि प्रतिभासते ॥ ३१॥

स्वप्ने चराचरं विश्वमात्मन्येव प्रतिष्ठितम् ।
देहादिष्वहमित्येवं भ्रमः संसारहेतुकः ॥ ३२॥

अन्तः प्रविष्टः शास्तेति मोक्षायोपादिशच्छ्रुतिः ।
एवमेषा महामाया वादिनामपि मोहिनी ॥ ३३॥

यस्मात्साक्षात्कृते सद्यो लीयते च सदाशिवे ।
देहेन्द्रियासुहीनाय मानदूरस्वरूपिणे ।
ज्ञानानन्दस्वरूपाय दक्षिणामूर्तये नमः ॥ ३४॥

इति श्रीदक्षिणामूर्तिस्तोत्रार्थ प्रतिपादके ।

प्रबन्धे मानसोल्लासे पञ्चमोल्लाससङ्ग्रहः ॥ ३५॥

राहुग्रस्तदिवाकरेन्दुसदृशो मायासमाच्छादनात्
सन्मात्रः करणोपसंहरणतो योऽभूत्सुषुप्तः पुमान् ।
प्रागस्वाप्समिति प्रबोधसमये यः प्रत्यभिज्ञायते
तस्मै श्री गुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ६॥

स्वप्ने विश्वं यथाऽन्तस्थं जाग्रत्यपि तथेति चेत् ।
सुषुप्तौ कस्य किं भाति कः स्थायी तत्र चेतनः ॥ १॥

सर्वं च क्षणिकं शून्यं सर्वमेव स्वलक्षणम् ।
सङ्घातः परमाणूनां मह्यम्ब्वग्निसमीरणाः ॥ २॥

मनुष्यादिशरीराणि स्कन्धपंचकसंहतिः ।
स्कन्धाश्च रूपविज्ञानसंज्ञासंकारवेदनाः ॥ ३॥

रूप्यन्त इति रूपाणि विषयाश्चेन्द्रियाण्यपि ।
विषयेन्द्रिययोर्ज्ञानं विज्ञानस्कन्ध उच्यते ॥ ४॥

संज्ञागुणक्रियाजातिविशिष्टप्रत्ययात्मिका ।
पञ्चधा कल्पना प्रोक्ता संज्ञास्कन्धस्य सौगतैः ॥ ५॥

गवां गौरिति संज्ञोक्ता जातिर्गोत्वं तु गोगतम् ।
गुणाः शुक्लादयस्तस्य गच्छत्याद्यास्तथा ॥ ६॥

शृङ्गी चतुष्पाल्लाङ्गूली विशिष्टप्रत्ययो ह्यसौ ।
एवं पञ्चविधा क्लृप्तः संज्ञास्कन्ध इतीर्यते ॥ ७॥

रागाद्याः पुण्यपापे च संस्कारस्कन्ध उच्यते ।
सुखं दुःखं च मोक्षश्च स्कन्धः स्याद्वेदनाह्वयः ॥ ८॥

पञ्चभ्य एव स्कन्धेभ्यो नान्य आत्मास्ति कश्चन ।
न कश्चदीश्वरः कर्ता स्वगतातिशयं जगत् ॥ ९॥

स्कन्धेभ्यः परमाणुभ्यः क्षणिकेभ्योऽभिजायते ।
पूर्वपूर्वक्षणादेव क्षणः स्यादुत्तरोत्तरः ॥ १०॥

पूर्वस्मादेव हि ज्ञानाज्जायते ज्ञानमुत्तरम् ।

स एवायमिति ज्ञानं सेयं ज्वालेव विभ्रमः ॥ ११॥

अस्ति भातीतिधीभ्रान्तैरात्मानात्मसु कल्प्यते ।
हानोपादानराहित्यादाकाशः किं प्रकाशते ॥ १२॥

इत्येवं बौद्धसिद्धान्ती भाषमाणो निषिद्ध्यते ।
शून्यं चेज्जगतो हेतुः जगदेव न सिद्ध्यति ॥ १३॥

घटः शून्यः पटः शून्यः इति कैः प्रतिपाद्यते ।
नैव भासेत शून्यं चेज्जगन्नरविषाणवत् ॥ १४॥

वस्त्वर्थी किमुपादद्याद्धारार्थः किं परित्यजेत् ।
को विदध्यान्निषिद्ध्येद्वा शून्यत्वात्स्वस्य चात्मनः ॥ १५॥

अवसीदेन्नीराकूतं तस्मात्सर्वमिदं जगत् ।
स्कन्धानां परमाणूनां न सङ्घातयितास्ति चेत् ॥ १६॥

सङ्घातो न विना हेतुं जडा घटपटादयः ।
महानुभावो भूयासमिति भ्रान्तश्च मन्यते ॥ १७॥

आत्मापलापको बौद्धः किमर्थं चरति व्रतम् ।
प्रत्यभिज्ञा यदि भ्रान्तिः भोजनादि कथं भवेत् ॥ १८॥

इष्टसाधनमेवैतदन्नं गतदिनान्नवत् ।
इति निश्चित्य बालोऽपि भोजनादौ प्रवर्तते ॥ १९॥

अवकाशप्रदातृत्वमाकाशार्थक्रिया यथा ।
तथैवार्थक्रिया पुंसः कर्तृत्वज्ञातृतादिका ॥ २०॥

सुषुप्तिसमयेप्यात्मा सत्यज्ञानसुखात्मकः ।
सुखमस्वाप्समित्येवं प्रत्यभिज्ञायते यतः ॥ २१॥

प्रत्यभिज्ञायत इति प्रयोगः कर्मकर्तरि ।
आत्मा स्वयंप्रकाशात्वाज्जानात्यात्मानमात्मना ॥ २२॥

सुषुप्तौ मायया मूढः जडोन्ध इति लक्ष्यते ।
अप्रकाशतया भाति स्वप्रकाशतयापि च ॥ २३॥

जडात्मनि च देहादौ साक्षादीशो विविच्यते ।
एषैव मोहिनी नाम मायाशक्तिर्महेशितुः ॥ २४॥

मोहापोहः प्रमातॄणां मोक्ष इत्यभिधीयते ।
अवस्थात्रयनिर्मुक्तो दोषदिभिरनाविलः ॥ २५॥

इषीक इव सन्मात्रो न्यग्रोधकणिकोपमः ।
बाह्याबाह्यदळोन्मुक्तकदळीकन्दसन्निभः ॥ २६॥

निरंशो निर्विकारश्च निराभासो निरञ्जनः ।
पुरुषः केवलः पूर्णः प्रोच्यते परमेश्वरः ॥ २७॥

वाचो यत्र निवर्तन्ते मनो यत्र विलीयते ।
एकीभवन्ति यत्रैव भूतानि भुवनानि च ॥ २८॥

समस्तानि च तत्त्वानि समुद्रे सिन्धवो यथा ।
कः शोकस्तत्र को मोह एकत्वमनुपश्यतः ॥ २९॥

वाच्यवाचकरूपत्वात्सविकल्पोपि सन्नयम् ।
देहादीनां व्यपोहेन सम्भवेन्निर्विकल्पकम् ॥ ३०॥

असन्नेव भवेद्विद्वानसद्ब्रह्मेति वेद चेत् ।
अस्ति ब्रह्मेति चेद्वेद सन्तेमेनं ततो विदुः ॥ ३१॥

इति श्रीदक्षिणामूर्तिस्तोत्रार्थप्रतिपादके ।
प्रबन्धे मानसोल्लासे षष्ठोल्लासस्य सङ्ग्रहः ॥ ३२॥

बाल्यादिष्वपि जाग्रदादिषु तथा सर्वास्ववस्थास्वपि
व्यावृत्तास्वनुवर्तमानमहमित्यन्तः स्फुरन्तं सदा ।
स्वात्मानं प्रकटीकरोति भजतां यो मुद्रया भद्रया
तस्मै श्री गुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ७॥

प्रत्यभिज्ञाबलादात्मा स्थायी निर्धार्यते यदि ।
का नाम प्रत्यभिज्ञैषा किं वा तस्याः प्रयोजनम् ॥ १॥

प्रत्यक्षादिप्रमाणेषु प्रत्यभिज्ञा न पठ्यते ।
कथं तस्याः प्रमाणत्वमिति पृच्छन् प्रबोध्यते ॥ २॥

भातस्य कस्य चित्पूर्वं भासमानस्य साम्प्रतम् ।
सोऽयमित्यनुसन्धानं प्रत्यभिज्ञानमुच्यते ॥ ३॥

तद्देशकालाकारादीनवधूयानुष्ङ्गिकान् ।
यथैकं वस्त्वनुस्यूतं सोऽयमित्यभिधीयते ॥ ४॥

मायानुष्ङ्गसञ्जातकिञ्चिज्ज्ञत्वाद्यपोहनात् ।
सर्वज्ञत्वादिविज्ञानं प्रत्यभिज्ञानमात्मनः ॥ ५॥

पूर्वजन्मानुभूतार्थस्मरणान्मृगशाबकः ।
जननीस्तन्यपानाय स्वयमेव प्रवर्तते ॥ ६॥

तस्मान्निश्चीयते स्थायीत्यात्मा देहान्तरेष्वपि ।
स्मृतिं विना न घटते स्तन्यपानं शिशोर्यतः ॥ ७॥

पूर्वत्रानुभवे काले स्मृतिकाले परत्र सन् ।
आत्मा संस्काररूपेण स्मरत्यर्थं स्वनिष्ठितम् ॥ ८॥

प्रत्यभिज्ञेति भावानां स्मृतिश्चेदभिधीयते ।
आत्मस्थैर्ये प्रमाणत्वं स्मृतिश्च प्राप्नुयात्कथम् ॥ ९॥

स्मृतौ प्रकाशो नार्थस्य न चाप्यर्थस्य निश्चयः ।
न चाप्यर्थानुभवयोरङ्गुल्योरिव सम्भवेत् ॥ १०॥

नानुभूतिविशिष्टस्य पदार्थस्य च दण्डिवत् ।
सर्वत्राप्येवमित्येवं प्रसङ्गादिति चेच्छृणु ॥ ११॥

प्राक्तनानुभवे नष्टे तदवष्टम्भसम्भवात् ।
संस्कारसंज्ञात्सामग्र्यात् पौरुषाज्जायते स्मृतिः ॥ १२॥

आवेद्यानुभवे नष्टे तदीयं विषयं प्रति ।
अनुभावकमात्मानं बोधयत्यनपायिनम् ॥ १३॥

विषये च प्रमुषिते नष्टे वाऽनुभवे सति ।
स्वविश्रान्तं स्मरत्यर्थं देवोऽप्रमुषितः सदा ॥ १४॥

प्रमोषणं प्रमातॄणां मायया तमसा कृतम् ।
मायाविद्ये प्रभोः शक्ती भानोश्छायाप्रभोपमे ॥ १५॥

अर्थानाच्छदयेन्माया विद्या व्याक्षिप्य दर्शयेत् ।
प्रत्यभिज्ञैव सर्वेषां प्रमाणानां च साधनम् ॥ १६॥

ईश्वरोन्योहमप्यन्य इति विच्छेदकारिणीम् ।
व्याक्षिप्य विद्यया मायामीश्वरोहमिति स्मृतिः ॥ १७॥

ईषत्प्रकाशोभूदीशो मायायवनिकावृतः ।
सम्यगावरणापाये सहस्रांशुरिव स्फुरेत् ॥ १८॥

न कारणानां व्यापारः प्रमाणानां न वा पुनः ।
प्रत्यभिज्ञापनं नाम मोहापसरणं परम् ॥ १९॥

यावन्ति सन्ति मानानि व्यवहारप्रवृत्तये ।
तेषां मोहापसरणाद्व्यपारोन्यो न विद्यते ॥ २०॥

जडानृतपरिच्छिन्नदेहधर्माश्चिदात्मनि ।
सत्यज्ञानसुखात्मत्वं मोहाद्देहेऽपि कल्प्यते ॥ २१॥

शुक्तौ रजतमित्येवं यथा व्यामुह्यतेऽन्यथा ।
सएव रूप्यं चेद्भाति विलयस्ते न सिध्यति ॥ २२
नात्यन्तासत्प्रकाशेत नरशृङ्गादिवत्क्वचित् ।
कान्ताकरादौ रजतमिति स्यात्स्मरणं भ्रमे ॥ २३॥

तेनेदं तुल्यमित्येवं स्यात्सादृश्याद्यदि भ्रमः ।
पीतः शङ्खो गुडस्तिक्त इत्यादौ नास्ति तुल्यता ॥ २४॥

तादात्म्येन स्फुरति चेद्रजतत्वेन शुक्तिका ।
विभ्रमो निरधिष्ठानो बाधो निरवधिर्भवेत् ॥ २५॥

बुद्धिस्थितं चेद्रजतं बाह्यत्वेन प्रतीयते ।
गुञ्जादौ ज्वलनारोपे देहदाहः प्रसज्यते ॥ २६॥

युक्तिहीनप्रकाशत्वाद् भ्रान्तेर्न ह्यस्ति लक्षणम् ।
यदि स्याल्लक्षणं किंचिद् भ्रान्तिरेव न सिध्यति ॥ २७॥

जलचन्द्रवदेकस्मिन्निर्भये रज्जुसर्पवत् ।
प्रतीयते यथा स्वर्णे कारणे कटकादिवत् ॥ २८॥

उपात्ते रूप्यवच्छुक्तौ व्याप्ते यक्षपुरीव खे ।
रश्म्यम्बुवत्स्फुरद्रूपे स्थाणौ चोरवदक्रिये ॥ २९॥

असत्कल्पमिदं विश्वमात्मन्यारोप्यते भ्रमात् ।
स्वयंप्रकाशं सद्रूपं भ्रान्तिबाधविवर्जितम् ॥ ३०॥

प्रत्यभिज्ञायते वस्तु प्राग्वन्मोहे व्यपोहिते ।
देहाद्युपाधौ निर्धूते स्यादात्मैव महेश्वरः ॥ ३१॥

स्मृतिः प्रत्यक्षमैतिह्यमित्यादीन्यपराण्यपि ।
प्रमाणान्याप्तवागाह प्रत्यभिज्ञाप्रसिद्धये ॥ ३२॥

इति श्रीदक्षिणामूर्तिस्तोत्रार्थप्रतिपादके ।
प्रबन्धे मानसोल्लासे सप्तमोल्लाससङ्ग्रहः ॥ ३३॥

विश्वं पश्यति कार्यकारणतया स्वस्वामिसंबन्धतः
शिष्याचार्यतया तथैव पितृपुत्राद्यात्मना भेदतः ।
स्वप्ने जाग्रति वा एष पुरुषो मायापरिभ्रामितः
तस्मै श्री गुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ८॥

प्रकाशव्यतिरेकेण पदार्थः कोऽपि नास्ति चेत् ।
परमार्थोपदेशान्तो व्यवहारः कथं भवेत् ॥ १॥

कस्य बन्धश्च मोक्षश्च बध्यते केन हेतुना ।
मायया लक्षणं किं स्यादित्येवं परिपृच्छतः ॥ २॥

प्रशनः स्यादुत्तरं वक्तुं प्रतिपत्तुं सुखेन च ।
उक्तोर्थः सप्तभिः श्लोकैः पुनः संक्षिप्य कथ्यते ॥ ३॥

पौनरुक्त्यं न दोषोऽत्र शब्देनार्थेन वा भवेत् ।
अभ्यासेन गरीयस्त्वमर्थस्य प्रतिपाद्यते ॥ ४॥

स्वयंप्रकाशे सद्रूपेऽप्येकस्मिन्परमेश्वरे ।
कार्यकारणसम्बन्धाद्यनेकविधकल्पना ॥ ५॥

राहोः शिरः सुषिः खस्य ममात्मा प्रतिमावपुः ।
इत्यादिकल्पना तुल्या न पृथग्वस्तुगोचरा ॥ ६॥

उपास्योपासकत्वेन गुरुशिष्यक्रमेण च ।
स्वामिभृतादिरूपेण क्रीडति स्वेच्छयेश्वरः ॥ ७॥

पितरं प्रति पुत्रो यः पुत्रं प्रति पितैव सः ।
एक एव हि नानेव कल्प्यते शब्दमात्रतः ॥ ८॥

तस्मात्प्रकाश एवास्ति परमार्थनिरूपणे ।
भेदप्रतीतिर्मिथ्यैव माययाऽऽत्मनि कल्पिता ॥ ९॥

मिथ्यात्वं नाम बाध्यत्वं सम्यग्ज्ञानोदये सति ।
शिष्याचार्योपदेशादि स्वप्नवत्प्रतिभासते ॥ १०॥

मिथ्याभूतोऽपि वेदान्तः सत्यमर्थं प्रबोधयेत् ।
देवताप्रतिमावच्च चित्रवत्प्रतिबिम्बवत् ॥ ११॥

सर्वोऽपि व्यवहारोऽयं मायया परिजृम्भणम् ।
सुषुप्तिसदृशी माया स्वप्रबोधेन बाध्यते ॥ १२॥

युक्तिहीनप्रकाशस्य संज्ञा मायेति कथ्यते ।
नासती दृश्यमाना सा बाध्यमाना न वा सती ॥ १३॥

न प्रकाशादियं भिन्ना छायेवार्कस्य तामसी ।
न चाभिन्ना जडत्वेन विरोधान्नोभयात्मिका ॥ १४॥

स्वहेत्ववयवाभावान्नेयं सावयवोच्यते ।
न चावयवहीना सा कार्येष्ववयवान्विता ॥ १५॥

अविचारितसिद्धेयं मायावेश्याविलासिनी ।
पुरुषं वञ्चयत्येव मिथ्याभूतैः स्वविभ्रमैः ॥ १६॥

न तस्या मूलविच्छेदमभिवाञ्छति केचन ।
तेषां पक्षे कथं मोक्षो मनसः सम्भविष्यति ॥ १७॥

तिस्रोप्यवस्था मनसो जाग्रत्स्वप्नसुषुप्तयः ।
चक्रवत्परिवर्तन्ते भेदभ्रान्त्येकहेतवः ॥ १८॥

ताभिः करोति कर्माणि पुनस्तैर्बध्यते मनः ।

मनसः केवलः साक्षी भानुवत्पुरुषः परः ॥ १९॥

यथा प्राणिकृतैरर्कः कर्मभिर्नैव बध्यते ।
तथा मनःकृतैरात्मा साक्षित्वान्नैव बध्यते ॥ २०॥

आत्मा करोति कर्माणि बध्यते मुच्यते च तैः ।
इत्यौपचारिकी क्लृप्तिर्भ्रममात्रैव केवलम् ॥ २१॥

धूमाभ्रधूलीनीहारैरस्पृष्टोऽपि दिवाकरः ।
यथा छन्न इवाभाति तथैवात्माऽपि मायया ॥ २२॥

यथा लीलावशात्कश्चिद्भ्राम्यमाणः कुमारकः ।
भ्रमत्तत्पश्यति जगत् शतचन्द्रं नभःस्थलम् ॥ २३॥

तथैव मायया जीवो भ्रामितो वासनावशात् ।
नानाकारमिदं विश्वं भ्रममाणं च पश्यति ॥ २४॥

संसृज्य मनसा देवः संसरन्निव लक्ष्यते ।
यथाऽर्को जलसंसर्गाच्चलन्नानेव लक्ष्यते ॥ २५॥

योगाभ्यासवशाद्येन मनो निर्विषयं कृतम् ।
निवृत्तः स पुमांसद्यो जीवन्मुक्तो भविष्यति ॥ २६॥

द्वा सुपर्णौ च सयुजाभवन्मायया शिवः ।
अजामेकां जुषन्नेको नानेवासीदिति श्रुतिः ॥ २७॥

इति श्रीदक्षिणामूर्तिस्तोत्रार्थप्रतिपादके ।
प्रबन्धे मानसोल्लासे अष्टमोल्लाससङ्ग्रहः ॥ २८॥

भूरम्भांस्यनलोऽनिलोऽम्बरमहर्नाथो हिमांशुः पुमान्
इत्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टकम् ।
नान्यत्किञ्चन विद्यते विमृशतां यस्मात्परस्माद्विभोः
तस्मै श्री गुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ९॥

कथमेवंविधा माया निवर्तेतेति पृच्छतः ।
ईश्वरोपासनारूपस्तदुपायः प्रकीर्त्यते ॥ १॥

षट्त्रिंशत्तत्त्वरूपासु परमेश्वरमूर्तिषु ।

प्रत्यक्षेणोपलभ्यन्ते सर्वैरप्यष्टमूर्तयः ॥ २॥

अमेयासु मनः क्षिप्रमारोढुं नार्हतीत्यतः ।
मूर्त्यष्टकमयीं ब्रूत गुरुः सर्वात्मभावनाम् ॥ ३॥

विराट्छरीरे ब्रह्माण्डे प्राणिनामपि विग्रहे ।
षट्त्रिंशत्तत्त्वसङ्घातः सर्वत्राप्यनुवर्तते ॥ ४॥

व्याप्तिर्व्यष्टिशरीरेऽस्मिन्मनसो व्यष्टिरूपिणः ।
तस्मात्सर्वात्मकमिदं स्वशरीरं विचिन्तयेत् ॥ ५॥

व्यष्ट्युपासनया पुंसः समष्टिव्याप्तिमाप्नुयात् ।
उपसंक्रामतीत्येवं दशकृत्व उपादिशत् ॥ ६॥

ब्रह्माण्डस्योदरे लोकाः सप्तभूरादयः स्मृताः ।
मूलादिब्रह्मरन्ध्रान्तेष्वाधारेषु वसन्ति ते ॥ ७॥

वीणादण्डो महामेरुस्थीनि कुलपर्वताः ।
गङ्गा तु पिङ्गळा नाडी यमुनेडा प्रकीर्तिता ॥ ८॥

सरस्वती सुषुम्नोक्ता नाड्योन्याः पुण्यनिम्नगाः ।
द्वीपाः स्युर्धातवः सप्त स्वेदबाष्पादयोब्धयः ॥ ९॥

मूले तिष्ठति कालाग्निरस्थिमध्ये च बाडबः ।
वैद्युतोग्निः सुषुम्नायां पार्थिवो नाभिमण्डले ॥ १०॥

हृदि तिष्ठति सूर्याग्निः कपाले चन्द्रमण्डलम् ।
नक्षत्राण्यपराण्याहुर्नेत्रादीनीन्द्रियाण्यपि ॥ ११॥

धार्यन्ते वायुभिर्लोकाः यथा प्रवहणादिभिः ।
प्राणादिभिर्दशविधैर्धार्यते वायुभिर्वपुः ॥ १२॥

प्राप्येडापिङ्गळे प्राणो मूलात्सूर्यस्वरूपतः ।
नासिकाभ्यां बहिर्गत्वा लीयते द्विषडङ्गुले ॥ १३॥

अष्टाङ्गुळेन सोमात्मा नाडीभ्यामन्तराविशत् ।
मलमूत्रमरुच्छुक्राण्यपानो विसृजेद्बहिः ॥ १४॥

अग्नीषोममयो भूत्वा सुषुम्नारन्ध्रमाश्रितः ।
आब्रह्मरन्ध्रमुद्गच्छन्नुदानो वर्धते स्वयम् ॥ १५॥

व्यापयेद्वपुषि व्यानो भुक्तान्नरसमन्वहम् ।
सन्धुक्षणं समानस्तु कायाग्नेः कुरुते सदा ॥ १६॥

नागो हिक्काकरः कूर्मो निमेषोन्मेषकारकः ।
क्षुतं करोति कृकरो देवदत्तो विजृम्भणम् ॥ १७॥

स्थौल्यं धनञ्जयः कुर्यान्मृतं चापि न मुञ्चति ।
आकाशो बहिरप्यन्तरवकाशं प्रयच्छति ॥ १८॥

चन्द्रार्कौ कालनेतारौ प्राणापानौ शरीरिणाम् ।
साक्षी पुरुष इत्येवं मूर्त्यष्टकमिदं वपुः ॥ १९॥

समनस्कमिदं योगी सेवमान उपासनम् ।
अष्टाङ्गयोगयुक्तः सन्नमनस्कं स गच्छति । २०॥

मनः प्रसादः सन्तोषो मौनमिन्द्रियनिग्रहः ।
दया दाक्षिण्यमास्तिक्यमार्जवं मार्दवं क्षमा ॥ २१॥

भावशुद्धिरहिंसा च ब्रह्मचर्यं स्मृतिर्धृतिः ।
इत्येवमादयोन्ये च मनः साध्या यमाः स्मृताः ॥ २२॥

स्नानं शौचं क्रतुः सत्यं जपो होमश्च तर्पणम् ।
तपो दानं तितिक्षा च नमस्कारः प्रदक्षिणम् ॥ २३॥

व्रतोपवासाद्याश्चान्ये कायिका नियमाः स्मृताः ।
स्वस्तिकं गोमुखं पद्मं हंसाख्यं ब्राह्ममासनम् ॥ २४॥

नृसिंहं गरुडं कूर्मं नागाख्यं वैष्णवासनम् ।
वीरं मयूरं वज्राख्यं सिद्धाख्यं रौद्रमासनम् ॥ २५॥

योन्यासनं विदुः शाक्तं शैवं पश्चिमतानकम् ।
निरालम्बनयोगस्य निरालम्बनमासनम् ॥ २६॥

निरालम्बतया ध्यानं निरालम्बः सदाशिवः ।
रेचकः पूरकश्चैव कुम्भकः प्राणसंयमः ॥ २७॥

इन्द्रियाणां समस्तानां विषयेभ्यो निवारणम् ।
प्रत्याहार इति प्रोक्तं प्रत्याहारार्थवेदिभिः ॥ २८॥

आधारे क्वापि मनसः स्थापनं धारणोच्यते ।
ब्रह्मविष्णुशिवादीनां चिन्ता ध्यानं प्रचक्षते ॥ २९॥

ध्यानादस्पन्दनं बुद्धेः समाधिरभिधीयते ।
अमनस्कसमाधिस्तु सर्वचिन्ताविवर्जितम् ॥ ३०॥

चित्ते निश्चलतां याते प्राणो भवति निश्चलः ।
चित्तस्य निश्चलत्वाय योगं सध्यानमभ्यसेत् ॥ ३१॥

आकुञ्चनमपानस्य प्राणस्य च निरोधनम् ।
लम्बिकोपरि जिह्वायाः स्थापनं योगसाधनम् ॥ ३२॥

चित्ते निश्चलतां याते प्राणे मध्यपथं गते ।
चिह्नान्येतानि जायन्ते पञ्चभूतजयात्पृथक् ॥ ३३॥

मलमूत्रकफाल्पत्वमारोग्यं लघुता तनोः ।
सुगन्धः स्वर्ण[स्वर] वर्णत्वं प्रथमं योगलक्षणम् ॥ ३४॥

कण्टकाग्रेष्वसङ्गत्वं जलपङ्केष्वमज्जनम् ।
क्षुत्तृडादिसहिष्णुत्वं द्वितीयं योगलक्षणम् ॥ ३५॥

बह्वन्नपानभोक्तृत्वमातपाग्निसहिष्णुता ।
दर्शनं श्रवणं दूरात्तृतीयं योगलक्षणम् ॥ ३६॥

मण्डूकप्लवनं भूमौ मर्कटप्लवनं द्रुमे ।
आकाशगमनं चेति चतुर्थं योगलक्षणम् ॥ ३७॥

ज्ञानं त्रिकालविषयमैश्वर्यमणिमादिकम् ।
अनन्तशक्तिमत्वं च पञ्चमं योगलक्षणम् ॥ ३८॥

प्राणे सुषुम्नां सम्प्राप्ते नादोन्तः श्रूयतेष्टधा ।
घण्टादुन्दुभिशङ्खाब्धिवीणावेण्वादितालवत् ॥ ३९॥

तनूनपात्तटित्तारातारेशतपनोपमम् ।

ब्रह्मनाडीं गते प्राणे बिम्बरूपं प्रकाशते ॥ ४०॥

श्वासाश्चरन्ति यावन्तो मनुष्यस्य दिनं प्रति ।
तावन्ति योजनान्यर्कः श्वासेश्वासे प्रधावति ॥ ४१॥

एकविंशतिसाहस्रं षट्छतं श्वाससङ्ख्यया ।
सोऽहमित्युच्चरत्यात्मा मन्त्रं प्रत्यहमायुषे ॥ ४२॥

सकारं च हकारं च लोपयित्वा प्रयोजयेत् ।
सन्धिं वै पूर्वरूपाख्यं ततोऽसौ प्रणवो भवेत् ॥ ४३॥

अकारश्चाप्युकारश्च मकारो बिन्दुनादकौ ।
पञ्चाक्षराण्यमून्याहुः प्रणवस्थानि पण्डिताः ॥

ब्रह्मा विष्णुश्च रुद्रश्चापीश्वरश्च सदाशिवः ।
तेष्वक्षरेषु तिष्ठन्ति षट्त्रिंशत्तत्त्वसंयुताः ॥ ४५॥

गुरुप्रसादाल्लभते योगमष्टाङ्गलक्षणम् ।
शिवप्रसादाल्लभते योगसिद्धिं च शाश्वतीम् ॥ ४६॥

सच्चिदानन्दरूपाय बिन्दुनादान्तरात्मने ।
आदिमध्यान्तशून्याय गुरूणां गुरवे नमः ॥ ४७॥

इति श्रीदक्षिणामूर्तिस्तोत्रार्थप्रतिपादके ।
प्रबन्धे मानसोल्लासे नवमोल्लाससङ्ग्रहः ॥ ४८॥

सर्वात्मत्वमिति स्फुटीकृतमिदं यस्मादमुष्मिंस्तवे
तेनास्य श्रवणात्तदर्थमननाद्ध्यानाच्च संकीर्तनात् ।
सर्वात्मत्वमहाविभूतिसहितं स्यादीश्वरत्वं स्वतः
सिद्ध्येत्तत्पुनरष्टधा परिणतं चैश्वर्यमव्याहतम् ॥ १०॥

परिच्छिन्नमहम्भावं परित्यज्यानुषङ्गिकम् ।
पूर्णाहम्भावलाभोस्य स्तोत्रस्य फलमुच्यते ॥ १॥

पुत्रपौत्रगृहक्षेत्रधनधान्यसमृद्धयः ।
अर्वाचीनाश्च सिध्यन्ति स्वर्गपाताळभूमिषु ॥ २॥

पाके प्रवर्तमानस्य शीतादिपरिहारवत् ।

प्रासङ्गिकाश्च सिध्यन्ति स्तोत्रेणानेन सर्वदा ॥ ३॥

ऐश्वर्यमीश्वरत्वं हि तस्य नास्ति पृथक्स्थितिः ।
पुरुषे धावमानेऽपि छाया तमनुधावति ॥ ४॥

अनन्तशक्तिरैश्वर्यं निष्यन्दाश्चाणिमादयः ।
स्वस्येश्वरत्वे संसिद्धे सिध्यन्ति स्वयमेव हि ॥ ५॥

यदीयैश्वर्यविप्रुड्भिर्ब्रह्मविष्णुशिवादयः ।
ऐश्वर्यवन्तो शासन्ते स एवात्मा सदाशिवः ॥ ६॥

पुष्पमानयता गन्धो विनेच्छामनुभूयते ।
पूर्णाहम्भावयुक्तेन परिच्छिन्ना विभूतयः ॥ ७॥

अणिमा महिमा चैव गरिमा लघिमा तथा ।
प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः ॥ ८॥

अत्यन्तमणुषु प्राणिष्वात्मत्वेन प्रवेशनम् ।
अणिमासंज्ञमैश्वर्यं व्याप्तस्य परमात्मनः ॥ ९॥

ब्रह्माण्डादिशिवान्तायाः षट्त्रिंशत्तत्त्वसंहतेः ।
बहिश्च व्याप्यवृत्तित्वमैश्वर्यं महिमाह्वयम् ॥ १०॥

महामेरुसमाङ्गस्य समुद्धरणकर्मणि ।
लाघवे तूलतुल्यत्वं लघिमानं विदुर्बुधाः ॥ ११॥

परमाणुसमाङ्गस्य समुद्धरणकर्मणि ।
गुरवे मेरुतुल्यत्वं गरिमाणं विदुर्बुधाः ॥ १२॥

पातालवासिनः पुंसो ब्रह्मलोकावलोकनम् ।
प्राप्तिर्नाम महैश्वर्यं सुदुष्प्रापमयोगिनाम् ॥ १३॥

आकाशगमनादीनामन्यासं सिद्धिसम्पदाम् ।
स्वेच्छामात्रेण संसिद्धिः प्राकाम्यमभिधीयते ॥ १४॥

स्वशरीरप्रकाशेन सर्वार्थानां प्रकाशनम् ।
प्राकाश्यमिदमैश्वर्यमिति केचित्प्रचक्षते ॥ १५॥

स्वेच्छामात्रेण लोकानां सृष्टिस्थित्यन्तकर्तृता ।
सूर्यादिनां नियोक्तृत्वमीशित्वमभिधीयते ॥ १६॥

सलोकपालाः सर्वेऽपि लोकाः स्ववशवर्तिनः ।
तदैश्वर्यं वशित्वाख्यं सुलभं शिवयोगिनाम् ॥ १७॥

यस्त्वेवं ब्राह्मणो वेत्ति तस्य देवा वशे स्थिताः ।
किं पुनः क्ष्मापतिव्याघ्रव्याळस्त्रीपुरुषादयः ॥ १८॥

सर्वात्मभावसाम्राज्यनिरन्तरितचेतसाम् ।
परिपक्वसमाधीनां किं किं नाम न सिध्यति ॥ १९॥

स्तोत्रमेतत्पठेद्धीमान्सर्वात्मत्वं च भावयेत् ।
अर्वाचीने स्पृहां मुक्त्वा फले स्वर्गादिसम्भवे ॥ २०॥

स्वर्गादिराज्यं साम्राज्यं मनुते न हि पण्डितः ।
तदेव तस्य साम्राज्यं यत्तु स्वाराज्यमात्मनि ॥ २१॥

सर्वात्मभावनावन्तं सेवन्ते सर्वसिद्धयः ।
तस्मादात्मनि साम्राज्यं कुर्यान्नियतमानसः ॥ २२॥

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ २३॥

प्रकाशात्मिकया शक्त्या प्रकाशानां प्रभाकरः ।
प्रकाशयति यो विश्वं प्रकाशोऽयं प्रकाशताम् ॥ २४॥

इति श्रीदक्षिणामूर्तिस्तोत्रार्थप्रतिपादके ।
प्रबन्धे मानसोल्लासे दशम्मोल्लाससङ्ग्रहः ॥ २५॥

इति श्रीमच्छङ्करभगवत्पादाचार्यकृत
दक्षिणामूर्तिस्तोत्रभावार्थवार्तिकं
सुरेश्वराचार्यकृतं समाप्तम् ॥

ॐ तत् सत् ॥